# मयूरेशस्तोत्रम्

ब्रह्मोवाच ।
पुराणपुरुषं देवं नानाक्रीडाकरं मुदा ।
मायाविनं दुर्विभाग्यं मयूरेशं नमाम्यहम् ॥ १॥

परात्परं चिदानन्दं निर्विकारं हृदिस्थितम् ।
गुणातीतं गुणमयं मयूरेशं नमाम्यहम् ॥ २॥

सृजन्तं पालयन्तं च संहरन्तं निजेच्छया ।
सर्वविघ्नहरं देवं मयूरेशं नमाम्यहम् ॥ ३॥

नानादैत्यनिहन्तारं नानारूपाणि बिभ्रतम् ।
नानायुधधरं भक्त्या मयूरेशं नमाम्यहम् ॥ ४॥

इन्द्रादिदेवतावृन्दैरभिष्टतमहर्निशम् ।
सदसद्व्यक्तमव्यक्तं मयूरेशं नमाम्यहम् ॥ ५॥

सर्वशक्तिमयं देवं सर्वरूपधरं विभुम् ।
सर्वविद्याप्रवक्तारं मयूरेशं नमाम्यहम् ॥ ६॥

पार्वतीनन्दनं शम्भोरानन्दपरिवर्धनम् ।
भक्तानन्दकरं नित्यं मयूरेशं नमाम्यहम् ॥ ७॥

मुनिध्येयं मुनिनुतं मुनिकामप्रपूरकम् ।
समष्टिव्यष्टिरूपं त्वां मयूरेशं नमाम्यहम् ॥ ८॥

सर्वज्ञाननिहन्तारं सर्वज्ञानकरं शुचिम् ।
सत्यज्ञानमयं सत्यं मयूरेशं नमाम्यहम् ॥ ९॥

अनेककोटिब्रह्माण्डनायकं जगदीश्वरम् ।
अनन्तविभवं विष्णुं मयूरेशं नमाम्यहम् ॥ १०॥

मयूरेश उवाच ।
इदं ब्रह्मकरं स्तोत्रं सर्वपापप्रनाशनम् ।
कारागृहगतानां च मोचनं दिनसप्तकात् ॥ ११॥

आधिव्याधिहरं चैव भुक्तिमुक्तिप्रदं शुभम् ॥ १२॥

